श्रीहरिः

# राधा-माधव-रस-सुधा

[ षोडशगीतम् ]

ाह्वेन श्रीहनुमत्प्रसादगुप्तेन हिंदीभाषायां रचिता
पोपाह्वेन साहित्याचार्येण श्रीरामनारायणदत्तशर्मणा
संस्कृतपद्यैरनूदिता

# प्रार्थना

तवास्मि राधिकाकान्त कर्मणा मनसा गिरा ।
कृष्णकान्ते तवैवास्मि युवामेव गतिर्मम ॥
शरणं वां प्रपन्नोऽस्मि करुणानिकराकरौ ।
प्रसादं कुरुतं दास्यं मयि दुष्टेऽपराधिनि ॥

श्री हरि

# भूमिका

सच्चिदानन्दात्मनो भगवतः श्रीनन्दनन्दनस्य स्वरूपभूत-मानन्दं तदीया ह्लादिनीशक्तिरेव वा प्रादुर्भावमुपेत्य श्रीराधा-त्मना राजते। श्रीराधा स्वरूपतो भगवतो वल्लवीवल्लभस्य विशुद्धतमप्रेम्ण एवाद्वितीया घनीभूता नित्या स्थितिरस्ति। ह्लादिन्याः सारः प्रेमा, प्रेम्णः सारो मादनाख्यो महाभावो मूर्तिमन्मादनाख्यमहाभावस्वरूपा चासौ श्रीमती राधा। सा प्रत्यक्षं गता साक्षाद्ह्लादिनी शक्तिर्नित्यमेधमानस्य पावन-तमस्य प्रेम्णा आत्मस्वरूपा तदधिष्ठात्री देव्येव देदीप्यते। सा तु लौकिककामगन्धतोऽपि हीना स्वसुखवाञ्छावासनाकल्पना-नामल्पतमांशतोऽपि सर्वथा सम्पर्कशून्या श्रीकृष्णसुखैकतात्पर्य-मयी श्रीकृष्णसुखजीवना च जागर्ति। तस्याः श्रीराधाया एकमात्रं कार्यमस्ति त्यागात्मिकया पवित्रतमया नित्यसेवया श्रीनन्दनन्दनस्यानन्दसंवर्धनं नाम। श्रीराधा पूर्णतमा शक्तिरस्ति श्रीकृष्णश्चापि पूर्णतमः शक्तिमान्। शक्तिशक्तिमतोर्भेदोऽभेद-श्चोभावेव नित्यं विलसतः। तत्राभेदस्थितौ श्रीराधा श्रीकृष्णश्च तत्त्वतो नित्यमेकमेवानाद्यनन्तं चैतन्यम्। एकीभूतावपि पुनरमू अनादिकालत एव प्रेमानन्दस्वरूपाया आत्मनो दिव्यलीलाया रसस्य समास्वादनार्थं नित्यमाकलितललितकलेवरौ द्वाभ्यां वपुर्भ्यां विराजेते। श्रीराधाया मादनाख्यमहाभावलक्षणः प्रेमा गौरवातिशयशाली सन्नपि मदीयतामयान्मधुरस्नेहादाविर्भूततया सर्वतोभावेनैश्वर्यलेशशून्यः सँल्लक्ष्यते। नह्यसावात्मनि गौरव-मुद्भावयति नापि च कामयते गुरुताम्। सर्वोपरि वरीवृत्यमानोऽ-प्ययमहंकारादिदोषलेशेनाप्यसम्पृक्त एव शोभते। एष मादना-ख्यो महाभाव एव राधाप्रेमपयोधेरेकं विशिष्टं रूपमस्ति। अमुनैव महाभावेन श्रीमती राधाऽऽ

## प्रार्थना

तवास्मि राधिकाकान्त कर्मणा मनसा गिरा ।
कृष्णकान्ते तवैवास्मि युवामेव गतिर्मम ॥
शरणं वां प्रपन्नोऽस्मि करुणानिकराकरौ ।
प्रसादं कुरुतं दास्यं मयि दुष्टेऽपराधिनि ॥

श्रीहरि

# भूमिका

सच्चिदानन्दात्मनो भगवतः श्रीनन्दनन्दनस्य स्वरूपभूतमानन्दं तदीया ह्लादिनीशक्तिरेव वा प्रादुर्भावमुपेत्य श्रीराधात्मना राजते। श्रीराधा स्वरूपतो भगवतो वल्लवीवल्लभस्य विशुद्धतमप्रेम्ण एवाद्वितीया घनीभूता नित्या स्थितिरस्ति। ह्लादिन्याः सारः प्रेमा, प्रेम्णः सारो मादनाख्यो महाभावो मूर्तिमन्मादनाख्यमहाभावस्वरूपा चासौ श्रीमती राधा। सा प्रत्यक्षं गता साक्षाद्ध्लादिनी शक्तिर्नित्यमेधमानस्य पावनतमस्य प्रेम्ण आत्मस्वरूपा तदधिष्ठात्री देव्येव देदीप्यते। सा तु लौकिककामगन्धतोऽपि हीना स्वसुखवाञ्छावासनाकल्पनानामल्पतमांशतोऽपि सर्वथा सम्पर्कशून्या श्रीकृष्णसुखैकतात्पर्यमयी श्रीकृष्णसुखजीवना च जागर्ति। तस्याः श्रीराधाया एकमात्रं कार्यमस्ति त्यागात्मिकया पवित्रतमया नित्यसेवया श्रीनन्दनन्दनस्यानन्दसंवर्धनं नाम। श्रीराधा पूर्णतमा शक्तिरस्ति श्रीकृष्णश्चापि पूर्णतमः शक्तिमान्। शक्तिशक्तिमतोर्भेदोऽभेदश्चोभावेव नित्यं विलसतः। तत्राभेदस्थितौ श्रीराधा श्रीकृष्णश्च तत्त्वतो नित्यमेकमेवानाद्यनन्तं चैतन्यम्। एकीभूतावपि पुनरमू अनादिकालत एव प्रेमानन्दस्वरूपाया आत्मनो दिव्यलीलाया रसस्य समास्वादनार्थं नित्यमाकलितललितकलेवरौ द्वाभ्यां वपुर्भ्यां विराजेते। श्रीराधाया मादनाख्यमहाभावलक्षणः प्रेमा गौरवातिशयशाली सन्नपि मदीयतामयान्मधुरस्नेहादाविर्भूततया सर्वतोभावेनैश्वर्यलेशशून्यः सँल्लक्ष्यते। नह्यसावात्मनि गौरवमुद्भावयति नापि च कामयते गुरुताम्। सर्वोपरि वरीवृत्यमानोऽप्ययमहंकारादिदोषलेशेनाप्यसम्पृक्त एव शोभते। एष मादनाख्यो महाभाव एव राधाप्रेमपयोधेरेकं विशिष्टं रूपमस्ति। अमुनैव महाभावेन श्रीमती राधाऽऽश्रयनिष्ठप्रेमद्वारा समाराधयति श्रेष्ठं प्रेष्ठतमं श्रीकृष्णम्। तत्र तया यन्महत्सुखं समुपलभ्यते तच्छ्रीराधया प्रणीतं सपर्यापर्यायं पर्युपेत्य विषयालम्बनात्मना श्रीकृष्णेनानुभूयमानात्सुखादनन्तगुणमधिकमस्ति। अत एव

'नाहं प्रेम्णो विषय' स्यामाश्रय एव भूयासम्' इति श्रीकृष्ण. सतृष्णं कामयते तात्पर्यमिदं यद् 'अह सेवया प्रेमोपलब्धिकर्ता विषयो न भूत्वा स्वयं सेवाकरणेन प्रेमदान-कर्तापि भूयासम् । आराध्य एव न भूत्वाऽऽराधकोऽपि भवेयम्' इत्यसावभिवाञ्छति । अत एव श्रीराधिकाया नित्यं समाराध्यः सन्नपि श्यामसुन्दरः श्रीकृष्णः स्वयं तस्याः समाराधकः संजायते । यत्र श्रीकृष्णः प्रेमी तत्र श्रीराधा प्रेमास्पदीभूता विराजते । यत्र पुनः प्रेमिकाभावाविष्टा श्रीमती राधिका समाराधिका प्रेष्ठतमस्य, तत्र तस्या अभीष्टः प्रेयान् नन्दनन्दनः प्रेमास्पदीभूय नन्दति । तावुभावपि स्वात्मनि प्रेमाभावं परिपश्यतो दीनमात्मानं मन्येते अधमर्णं चापरस्य । यतोऽयमेव स्वभावो विशुद्धप्रेमातिशयस्य ।

रस-साहित्ये प्रायेण भूयिष्ठतरा रचना ईदृश्य एव समुपलभ्यन्ते यासु श्रीकृष्णः प्रेमास्पदतया विषयालम्बनतया वा वर्ण्यते श्रीराधायाश्च प्रेमिकात्वेनाश्रयालम्बनतया वा चित्रणं लोचनगोचरतामानीयते । परंत्वेषु षोडशगीतेषु सन्त्यष्टौ पदानीदृशानि यत्र श्रीकृष्णः श्रीराधामात्मनः प्रेमास्पदतामा-नीय तां प्रेमसाम्राज्यस्वामिनीं मन्यते स्वात्मानं च प्रेमवैभव-हीनं दीनमङ्गीकरोति । तदुत्तररूपेण चाष्टौ पदानि श्रीराधामुख-निर्गतानि तथाविधानि सन्ति यत्र श्रीराधा स्वात्मनोऽत्यन्तं दैन्यं दर्शयति प्रेष्ठतमस्य श्यामसुन्दरस्य चानुपमप्रेमघनरूपतां प्रथयति । एवमेषु षोडशपदेषु प्रेमिगतस्य दैन्यस्य प्रेमास्पदीय-प्रमहत्तायाश्चोत्तरोत्तरं विकासो विलोचनविषयीक्रियते ।

भावुकाः पाठका भृशं गभीरतायामवतीर्य पदानामेषां भावानधिगन्तुं प्रयतिष्यन्ते चेत्तदा विज्ञास्यन्ति यच्छ्रीराधा कृष्णयोः प्रेम्णः स्वरूपं कियत् पवित्रतमं कीदृशं समर्पणपूर्णं दिव्यातिदिव्यं चास्ति । एतादृशमेव प्रेमादर्शभूतं मत्वा प्रेम-मार्गीयाः साधकाः स्वीयां साधनपद्धतिं विनिश्चिनुयुः श्रीराधा-माधवचरणारविन्दविषयकं प्रेम चोपलभेरन्निस्येतदर्थमेव पदाना-मेषां प्रकाशनं विहितमस्ति शुभम्

श्रीहरि

# श्रीराधा-माधव-रस-सुधा

## [ षोडशगीत ]

### महाभाव-रसराज-वन्दना

दोउ चकोर, दोउ चंद्रमा, दोउ अलि, पंकज दोउ।
दोउ चातक, दोउ मेघ प्रिय, दोउ मछरी, जल दोउ॥
आस्रय-आलंबन दोउ, बिषयालंबन दोउ।
प्रेमी-प्रेमास्पद दोउ, तत्सुख-सुखिया दोउ॥
लीला-आस्वादन-निरत महाभाव-रसराज।
बितरत रस दोउ दुहुन कौं, रचि बिचित्र सुठि साज॥
सहित बिरोधी धर्म-गुन जुगपत नित्य अनंत।
बचनातीत अचिंत्य अति, सुषमामय श्रीमंत॥
श्रीराधा-माधव-चरन बंदौं बारंबार।
एक तत्व दो तनु धरें नित-रस-पारावार॥

---

### महाभाव-रसराज-वन्दनम्

उभौ मिथश्चन्द्रमसौ चकोरावुभौ मिलिन्दावरविन्दके च।
द्वौ चातकौ द्वावपि वारिवाहौ मीनावुभौ नीरतनू उभौ च॥
परस्परं द्वौ विषयाश्रयाख्यावालम्बनावादिविभावरूपौ।
द्वौ प्रेमिणौ द्वौ प्रणयास्पदे तावुभौ मिथस्तत्सुखसौख्यभाजौ॥
लीलारसास्वादनसक्तचित्ताविमौ महाभावरसाधिराजौ।
उभावुभाभ्यां च रसं ददाते शुभं विचित्रं विरचय्य वेषम्॥
धर्मा गुणा ये तु मिथोविरुद्धा नित्या अनन्ता अति चाप्यचिन्त्याः
च शोभामयौ श्रीलसितौ स्मरामि

( १ )

## श्रीकृष्णके प्रेमोद्गार—श्रीराधाके प्रति

( राग मालकोस—तीन ताल )

राधिके ! तुम मम जीवन-मूल ।
अनुपम अमर प्रान-संजीवनि, नहिं कहुँ कोउ समतूल ॥
जस सरीर में निज-निज थानहिं सबही सोभित अंग ।
किंतु प्रान बिनु सबहि ब्यर्थ, नहिं रहत कतहुँ कोउ रंग ॥
तस तुम प्रिये ! सबनि के सुख की एक मात्र आधार ।
तुम्हरे बिना नहीं जीवन-रस, जासौं सब कौ प्यार ॥
तुम्हरे प्राननि सौं अनुप्रानित, तुम्हरे मन मनवान ।
तुम्हरौ प्रेमसिंधु-सीकर लै करौं सबहि रसदान ॥
तुम्हरे रस-भंडार पुन्य तैं पावत भिच्छुक चून ।
तुम सम केवल तुमहि एक हौ, तनिक न मानौ ऊन ॥
सोऊ अति मरजादा, अति संभ्रम-भय-दैन्य-सँकोच ।
नहिं कोउ कतहुँ कबहुँ तुम-सी रसस्वामिनि निस्संकोच ॥
तुम्हरौ स्वत्व अनंत नित्य, सब भाँति पूर्न अधिकार ।
कायब्यूह निज-रस-बितरन करवावति परम उदार ॥
तुम्हरी मधुर रहस्यमई मोहनि माया सौं नित्य ।
दच्छिन बाम रसास्वादन हित बनतौ रहूँ निमित्त ॥

# प्रथमं गीतम्

## श्रीराधासविधे श्रीकृष्णस्य भावनिवेदनम्

राधिके त्वं मम जीवनमूलम् ।
अतुलामरा प्राणसंजीवन्यसि ते क्वापि किमपि नहि तुल्यम् ॥१॥
यथा शरीरे निजनिजस्थले शोभां वहति शुभां सममङ्गम् ।
प्राणैर्विना परंतु वृथा स्यात् सकलमशोभं विरहितरङ्गम् ॥२॥
तथा सुखस्य समेषां श्रेष्ठे त्वमिहैकैवाधारधरित्री ।
नास्ति रसो जीवने विना त्वां रतिरखिलानां यत्र भवित्री ॥३॥
प्राणैरनुप्राणितोऽहं तव मनसा मनोयुक्त इति जाने ।
त्वत्प्रेमाम्बुधिकणमादाय समेभ्योऽहं निरतो रसदाने ॥४॥
रसभाण्डागारात् खलु पुण्यात्तव याचका लभन्ते चूर्णम् ।
त्वत्सदृशी केवलमेका त्वं मन्यस्वात्र न किंचिदपूर्णम् ॥५॥
मर्यादाति तथा दाने मम संभ्रमभीतिदैन्यसंकोचाः ।
क्वापि कापि न कदापि रसस्य स्वामिनी त्वमिव निस्संकोचा ॥६॥
मयि ते स्वत्वमनन्तमनिशमिह सर्वविधाः सकला अधिकाराः ।
कारयसेऽतः कायव्यूहैर्निजरसदानं परमोदारा ॥७॥
मोहिन्या रहस्यमय्या तव मधुरमायया विवशो नित्यम् ।
दक्षिणवामभावयोस्ते स्यामास्वादने रसस्य निमित्तम् ॥८॥

## ( २ )

## श्रीराधाके प्रेमोद्गार—श्रीकृष्णके प्रति

( राग रागेश्वरी—ताल दादरा )

हौं तो दासी नित्य तिहारी ।
प्राननाथ जीवन धन मेरे, हौं तुम पै बलिहारी ॥
चाहें तुम अति प्रेम करौ, तन-मन सौं मोहि अपनाऔ
चाहें द्रोह करौ, त्रासौ, दुख देइ मोहि छिटकाऔ
तुम्हरौ सुख ही है मेरौ सुख, आन न कछु सुख जानौं
जो तुम सुखी होउ मो दुख में, अनुपम सुख हौं मानौं ।
सुख भोगौं तुम्हरे सुख कारन, और न कछु मन मेरे ।
तुमहि सुखी नित देखन चाहौं निसि-दिन, साँझ-सवेरे ।
तुमहि सुखी देखन हित हौं निज तन-मन कौं सुख देऊँ ।
तुमहि समरपन करि अपने कौं नित तव रुचि कौं सेऊँ ।
तुम मोहि 'प्रानेस्वरि', 'हृदयेस्वरि', 'कांता' कहि सचु पावौ
यातैं हौं स्वीकार करौं सब, जद्यपि मन सकुचावौं ।

# द्वितीयं गीतम्

## श्रीकृष्णसविधे श्रीराधाया भावनिवेदनम्

( १ )

दासी त्वहं बलिरिवोपहृता तवास्मि
हे प्राणनाथ ! मम जीवनवित्त ! नित्यम् ।
प्रीतिं परां कुरु, हृदा वपुषा गृहाण,
दुह्याथवा दूरय, दूरय दुःखयित्वा ॥

( २ )

सौख्यं तवैव मम नान्यसुखं नु जाने
दुःखे सुखी यदि ममास्यतुलं सुखं मे ।
सेवे सुखं तव सुखाय न मानसेऽन्यत्
त्वां संध्ययोर्निशि दिवा सुखिनं दिदृक्षे ।

( ३ )

त्वामीक्षितुं सुखिनमात्मतनूमनोभ्यां
सौख्यं ददे तव रुचिं च भजेऽर्पितात्मा ।
प्राणेश्वरीत्यभिवदन् 'हृदयेशि', 'कान्ते'
त्वं मां सुखीति तदहं त्वर्पितापि मन्ये ॥

( २ )

## श्रीराधाके प्रेमोद्गार—श्रीकृष्णके प्रति

( राग रागेश्वरी—ताल दादरा )

हौं तो दासी नित्य तिहारी ।
प्राननाथ जीवन धन मेरे, हौं तुम पै बलिहारी ॥
चाहें तुम अति प्रेम करौ, तन-मन सौं मोहि अपनाऔ
चाहें द्रोह करौ, त्रासौ, दुख देइ मोहि छिटकाऔ
तुम्हरौ सुख ही है मेरौ सुख, आन न कछु सुख जानौं ।
जो तुम सुखी होउ मो दुख में, अनुपम सुख हौं मानौं ।
सुख भोगौं तुम्हरे सुख कारन, और न कछु मन मेरे ।
तुमहि सुखी नित देखन चाहौं निसि-दिन, साँझ-सवेरे ।
तुमहि सुखी देखन हित हौं निज तन-मन कौं सुख देऊँ ।
तुमहि समरपन करि अपने कौं नित तव रुचि कौं सेऊँ ।
तुम मोहि 'प्रानेस्वरि', 'हृदयेस्वरि', 'कांता' कहि सचु पावौ
यातैं हौं स्वीकार करौं सब, जद्यपि मन सकुचावौं ।

# द्वितीयं गीतम्

## श्रीकृष्णसन्निधे श्रीराधाया भावनिवेदनम्

( १ )

दासी त्वहं ब्बलिरिवोपहृता तवास्मि
हे प्राणनाथ ! मम जीवनवित्त ! नित्यम् ।
प्रीतिं परां कुरु, हृदा वपुषा गृहाण,
त्यक्त्वाथवा दरय, दूरय दुःखयित्वा ॥

( २ )

सौख्यं तवैव मम नान्यसुखं नु जाने
दुःखे सुखी यदि ममास्यतुलं सुखं मे ।
सेवे सुखं तव सुखाय न मानसेऽन्यत्
त्वां संध्ययोर्निशि दिवा सुखिनं दिदृक्षे ।

( ३ )

त्वामीक्षितुं सुखिनमात्मतनूमनोभ्यां
सौख्यं ददे तव रुचिं च भजेऽर्पितात्मा ।
प्राणेश्वरीत्यभिवदन् 'हृदयेशि', 'कान्ते'
त्वं मां सुखीति तदहं त्रपितापि मन्ये ॥

( ३ )

## श्रीकृष्णके प्रेमोद्गार—श्रीराधाके प्रति

( राग भैरवी—तीन ताल )

हे आराध्या राधा! मेरे मनका तुझमें नित्य निवास।
तेरे ही दर्शन कारण मैं करता हूँ गोकुलमें वास॥
तेरा ही रस-तत्व जानना, करना उसका आस्वादन।
इसी हेतु दिन-रात घूमता मैं करता वंशीवादन॥
इसी हेतु स्नानको जाता, बैठा रहता यमुना-तीर।
तेरी रूपमाधुरीके दर्शनहित रहता चित्त अधीर॥
इसी हेतु रहता कदम्बतल, करता तेरा ही नित ध्यान।
सदा तरसता चातककी ज्यों, रूप-स्वातिका करने पान॥
तेरी रूप-शील-गुण-माधुरि मधुर नित्य लेती चित चोर।
प्रेमगान करता नित तेरा, रहता उसमें सदा विभोर॥

# तृतीयं गीतम्

## श्रीराधासविधे श्रीकृष्णस्य भावनिवेदनम्

(१)

समाराध्ये राधे त्वयि वसति नित्यं मम मन-
स्त्वदीक्षाभिक्षार्थं त्वहमधिशये गोकुलगृहम् ।
तवैवाप्तुं ज्ञातुं परमरसतत्त्वं रसयितुं
दिवा नक्तं भ्राम्यन्नयि मुरलिकां स्वां मुखरये ॥

(२)

स्नातुं त्वहं याम्यत एव हेतो-
र्यमस्वसुश्चोपविशामि तीरे ।
द्रष्टुं हि रूपामृतमाधुरीं ते
सदास्ति मच्चित्तमपास्तधैर्यम् ॥

(३)

तले कदम्बस्य वसाम्यतोऽहं
त्वामेव नित्यं परिचिन्तयामि ।
त्वद्रूपसुस्वातिपयोऽभिपातुं
वाञ्छाम्यहं चातकवत् सतृष्णः ॥

(४)

मुष्णाति ते शीलवपुर्गुणानां
सदा मनो मे मधुमाधुरीयम्
अतोऽनिशं प्रेम तवाभिगायन्
न तत्र लीनः स्वमपि स्मरामि ॥

( ५ )

## श्रीराधाके प्रेमोद्गार—श्रीकृष्णके प्रति

( राग भैरवी—तीन ताल )

मेरी इस विनीत विनतीको सुन लो, हे व्रजराजकुमार
युग-युग, जन्म-जन्ममें मेरे तुम ही बनो जीवनाधार।
पद-पङ्कज-परागकी मैं नित अलिनी बनी रहूँ, नँदलाल !
लिपटी रहूँ सदा तुमसे मैं, कनकलता ज्यों तरुण तमाल।
दासी मैं हो चुकी सदाको, अर्पणकर चरणोंमें प्राण।
प्रेम-दामसे बँध चरणोंमें, प्राण हो गये धन्य महान॥
देख लिया, त्रिभुवनमें बिना तुम्हारे और कौन मेरा।
कौन पूछता है 'राधा' कह, किसको राधाने हेरा॥
इस कुल, उस कुल, दोनों कुल, गोकुलमें मेरा अपना कौन ?
अरुण मृदुल पदकमलोंकी ले शरण अनन्य, गयी हो मौन॥
देखे बिना तुम्हें पलभर भी मुझे नहीं पड़ता है चैन।
तुम ही प्राणनाथ नित मेरे, किसे सुनाऊँ मनके बैन॥
रूप-शील-गुणहीन समझकर कितना ही दुतकारो तुम।
चरणधूलि मैं, चरणोंमें ही लगी रहूँगी, बस, हरदम॥

# चतुर्थं गीतम्

## श्रीकृष्णसविधे श्रीराधाया भावनिवेदनम्

(१)

नम्रमिमं मे विनयं व्रजराजकुमार धारय श्रवणे।
युगे युगे प्रतिजन्म त्वमेव भव मम तु जीवनाधारः॥

(२)

स्यां पदपद्मपरागे रागेण तवालिर्ना नन्दलाल्य।
तरुणतमाले चाहं हेमलतेवानिशं त्वयि लगेयम्॥

(३)

सततं दासीभूता चरणयुगे ते समर्पितप्राणा।
प्रेमदामदृढबद्धाः पद्योः प्राणा इमे परमधन्याः॥

(४)

आलोकितं त्रिलोक्यामन्यः कस्त्वां विना मामकीनः।
राधेति को नु पृच्छति को वान्यो राधया मया दृष्टः॥

(५)

इह तत्र चोभयकुले कोऽन्यो वा गोकुले ममात्मीयः।
मृदुलारुणपदकमलं तवाश्रितानन्यमास्थिता मौनम्॥

(६)

न लभे सुखं न शान्तिं निमेषमपि दर्शनं विना तेऽहम्।
प्राणेशस्त्वं हि सदा कमन्यमावेदये मनोवार्ताम्॥

(७)

रूपशीलगुणहीनां मत्वा कियदपि सुदूरय त्वं माम्।
अहमस्मि चरणधूलिर्लग्ना स्यामेव चरणयोः सततम्

(५)

## श्रीकृष्णके प्रेमोद्गार—श्रीराधाके प्रति

( राग परज—तीन ताल )

हे वृषभानु-राज-नन्दिनि ! हे अतुल प्रेम-रस-सुधा-निधान !
गाय चराता वन-वन भटकूँ, क्या समझूँ मैं प्रेम-विधान ॥
ग्वाल-बालकोंके सँग डोलूँ, खेलूँ सदा गँवारू खेल ।
प्रेम-सुधा-सरिता तुमसे मुझ तप्त धूलका कैसा मेल ?
तुम स्वामिनि अनुरागिणि ! जब देती हो प्रेमभरे दर्शन ।
तब अति सुख पाता मैं, मुझपर बढ़ता अमित तुम्हारा ऋण ॥
कैसे ऋणका शोध करूँ मैं, नित्य प्रेम-धनका कंगाल ।
तुम्हीं दया कर प्रेमदान दे मुझको करती रहो निहाल ॥

## पञ्चमं गीतम्

### श्रीराधासविधे श्रीकृष्णस्य भावनिवेदनम्

( १ )

हे वृषभानुराजनन्दिनि हे अतुलप्रेमरससुधाखने ।
प्रेमविधानं किमहं जानै गाश्चारयन्नटामि वने ॥
दोलामि सदा गोपबालकैः खेलामि ग्राम्याः खेलाः ।
स्नेहसुधासरिता कथं त्वया मम सुतप्तपांसोर्मेला ॥

( २ )

त्वं स्वामिन्यनुरागिणि दत्से यदा दर्शनं रसमसृणम् ।
सुखमतिशयमाप्नोमि तदाहं मयि तवैषते न्वमितसृणम् ॥
परिशोधं करवाणि कथमहं नित्यं प्रीतिविचहीनः ।
त्वं हि प्रेम दयित्वा दत्वाऽऽनन्दय मां याचे दीनः ॥

( ६ )

## श्रीराधाके प्रेमोद्गार—श्रीकृष्णके प्रति

( राग परज—तीन ताल )

सुन्दर श्याम कमल-दल-लोचन, दुखमोचन व्रजराजकिशोर।
देखूँ तुम्हें निरन्तर हिय-मन्दिरमें, हे मेरे चितचोर ! ॥
लोक-मान-कुल-मर्यादाके शैल सभी कर चकनाचूर।
रक्खूँ तुम्हें समीप सदा मैं, करूँ न पलक तनिक भर दूर ॥
पर मैं अति गँवार ग्वालिनि, गुणरहित, कलंकी, सदा कुरूप।
तुम नागर गुण-आगर अतिशय, कुलभूषण, सौन्दर्य-स्वरूप ॥
मैं रस-ज्ञान-रहित, रसवर्जित, तुम रसनिपुण, रसिक-सिरताज।
इतनेपर भी, दयासिन्धु ! तुम मेरे उरमें रहे विराज ॥

## षष्ठं गीतम्

### श्रीकृष्णसविधे श्रीराधाया भावनिवेदनम्

( १ )

श्याम मनोज्ञ कमलदललोचन दुःखविमोचन व्रजपकिशोर ।
त्वां पश्यामि निरन्तरमधिहृदयायतनं मम चेतश्चोर ॥
लोकमानकुलमर्यादामयशैलान् सकलांश्चूर्णीकृत्य ।
त्वां पार्श्वे रक्षामि सदाहं क्षणमपि न मनाग् दूरीकृत्य ॥

( २ )

परमहमतिमूढा गोप्यगुणा कुरूपा कलङ्काभरणम् ।
त्वमतिगुणागारो नागर ! सौन्दर्यमयः स्वकुलाभरणम् ॥
अहमरसज्ञा रसरहिता त्वं रसनिपुणो रसिकप्रवरः ।
संराजसे तथापि मनसि मे करुणासिन्धो ! कृपापरः ॥

( ७ )

## श्रीकृष्णके प्रेमोद्गार—श्रीराधाके प्रति

( राग भैरवी तर्ज—तीन ताल )

हे प्रियतमे राधिके ! तेरी महिमा अनुपम, अकथ, अनन्त ।
युग-युगसे गाता मैं अविरल, नहीं कहीं भी पाता अन्त ॥

सुधानन्द बरसाता हियमें तेरा मधुर वचन अनमोल ।
बिका सदा के लिये मधुर दृग-कमल, कुटिल भृकुटीके मोल ॥

जपता तेरा नाम मधुर अनुपम, मुरलीमें नित्य ललाम ।
नित अतृप्त नयनोंसे तेरा रूप देखता अति अभिराम ॥

कहीं न मिला प्रेम शुचि ऐसा, कहीं न पूरी मनकी आश ।
एक तुझीको पाया मैंने, जिसने किया पूर्ण अभिलाष ॥

नित्य तृप्त निष्काम नित्यमें मधुर अतृप्ति, मधुरतम काम ।
तेरे दिव्य प्रेमका है यह जादूभरा मधुर परिणाम ॥

## सप्तमं गीतम्

### श्रीराधासन्निधे श्रीकृष्णस्य भावनिवेदनम्

(१)

पारे गिरां प्रेयसि राधिके ते
तुलामतीतो महिमास्त्यनन्तः ।
गायाम्यहं तं सततं युगेभ्यो
नास्यावधिं कुत्रचिदप्युपैमि ॥

(२)

सुधामुदं वर्षति मानसे मे
अहो अमूल्यं मधुरं वचस्ते ।
क्रीतः सदाहं मधुरेण तेऽस्मि
द्वयेन दृक्पङ्कजयोर्भ्रुकुट्या ॥

(३)

जपाम्यहं मुद्गतुलं ललामं
नामानिशं ते मुरलीरवेषु ।
निरूपये रूपमतृप्तदृग्भ्या-
महर्निशं चाति मनोऽभिरामम् ॥

(४)

प्रेमोपलब्धं न विशुद्धमीदृक्
पूर्णा न चाशा मनसः क्वचिन्मे ।
एका त्वमेवापि मया यया मे
सम्पूरितः सर्वमनोऽभिलाषः ॥

(५)

या नित्यतृप्ते मधुरात्यतृप्ति-
र्या मय्यकामे मधुरोऽतिकामः ।
तवैव दिव्यप्रणयस्य मिष्टं
फलं तदस्त्यद्भुतमैन्द्रजालम् ॥

( ८ )

## श्रीराधाके प्रेमोद्गार—श्रीकृष्णके प्रति

( राग भैरवी तर्ज—तीन ताल )

सदा सोचती रहती हूँ मैं, क्या दूँ तुमको, जीवनधन !
जो धन देना तुम्हें चाहती, तुम ही हो वह मेरा धन।
तुम ही मेरे प्राणप्रिय हो, प्रियतम ! सदा तुम्हारी मैं।
वस्तु तुम्हारी तुमको देते पल-पल हूँ बलिहारी मैं।
प्यारे ! तुम्हें सुनाऊँ कैसे अपने मनकी सहित विवेक।
अन्योंके अनेक, पर मेरे तो तुम ही हो, प्रियतम ! एक।
मेरे सभी साधनोंकी, बस, एकमात्र हो तुम ही सिद्धि।
तुम ही प्राणनाथ हो, बस, तुम ही हो मेरी नित्य समृद्धि।
तन-धन-जनका बन्धन टूटा, छूटा भोग-मोक्षका रोग।
धन्य हुई मैं प्रियतम ! पाकर एक तुम्हारा प्रिय संयोग।

# अष्टमं गीतम्

## श्रीकृष्णसविधे श्रीराधाया भावनिवेदनम्

( १ )

संचिन्तये सदा जीवनधन किमहं ते नु ददीय ? ।
यद् दातुं वाञ्छाम्यनिशं तद् धनं त्वमेव मदीयम् ॥
त्वं खल्वसि मे प्राणवल्लभः, प्रियतम ! सदा तवाहम् ।
ददती वस्तु तवानुपलं ते निर्मञ्छनं गताहम् ॥

( २ )

मनोगतं कथयानि कथमहं त्वां वल्लभ ! सविवेकम् ।
अन्येषां बहवः, परंतु मम को नु विना त्वामेकम् ॥
सकलसाधनानामलमेकोऽसि त्वमेव मे सिद्धिः ।
त्वं हि प्राणानामधिनाथस्त्वं मम नित्यसमृद्धिः ॥

( ३ )

तनुधनजनबन्धो विच्छिन्नो भोगमोक्षभयरोगः ।
धन्याहं प्रियतम ! ते प्राप्तो ह्येकः प्रियसंयोगः ॥

( ६ )

## श्रीकृष्णके प्रेमोद्गार—श्रीराधाके प्रति

( राग गूजरी—ताल कहरवा )

राधे, हे प्रियतमे, प्राण-प्रतिमे, हे मेरी जीवन-मूल !
पलभर भी न कभी रह सकता, प्रिये मधुर ! मैं तुमको भूल ॥
श्वास-श्वासमें तेरी स्मृतिका नित्य पवित्र स्रोत बहता ।
रोम-रोम अति पुलकित तेरा आलिङ्गन करता रहता ॥
नेत्र देखते तुझे नित्य ही, सुनते शब्द मधुर यह कान ।
नासा अङ्ग-सुगन्ध सूँघती, रसना अधर-सुधारस-पान ॥
अङ्ग-अङ्ग शुचि पाते नित ही तेरा प्यारा अङ्ग-स्पर्श ।
नित्य नवीन प्रेम-रस बढ़ता, नित्य नवीन हृदयमें हर्ष ॥

# नवमं गीतम्

## श्रीराधासविधे श्रीकृष्णस्य भावनिवेदनम्

राधे ! हे प्रियतमे ! प्राणप्रतिमे मम जीवन मूलवरे ॥
त्वां विस्मृत्य कदापि न पलमपि शक्तः स्थातुं मधुरतरे ॥
श्वासे श्वासे तव स्मृतेः प्रवहति पुण्यं स्रोतः सततम् ।
रोम रोम मे हृषिततरं त्वामालिङ्गति नित्यमविरतम् ॥

( २ )

त्वां पश्यतो दृशावनिशं ते शृणुतो मृदुशब्दं श्रवणे ।
घ्राणं जिघ्रति गन्धं रसना पिबत्यधररसमनुक्षणे ॥
अङ्गमङ्गमनिशं शुचि यत्ते प्राप्तः प्रियो वपुःस्पर्शः ।
प्रेमरसो वर्धते नवो हृदि नित्यं नवहर्षोत्कर्षः ॥

( १० )

## श्रीराधाके प्रेमोद्गार—श्रीकृष्णके प्रति

( राग गूजरी—ताल कहरवा )

मेरे धन-जन-जीवन तुम ही, तुम ही तन-मन, तुम सब धर्म।
तुम ही मेरे सकल सुख सदन, प्रिय निजजन, प्राणोंके मर्म॥
तुम्हीं एक, बस, आवश्यकता, तुम ही एकमात्र हो पूर्ति।
तुम्हीं एक सब काल, सभी विधि हो उपास्य शुचि सुन्दर मूर्ति॥
तुम ही काम-धाम सब मेरे, एकमात्र तुम लक्ष्य महान।
आठों पहर बसे रहते तुम मम मन-मन्दिरमें भगवान॥*
सभी इन्द्रियोंको तुम शुचितम करते नित्य स्पर्श-सुख-दान।
बाह्याभ्यन्तर नित्य निरन्तर तुम छेड़े रहते निज तान॥
कभी नहीं तुम ओझल होते, कभी नहीं तजते संयोग।
घुले-मिले रहते करवाते-करते निर्मल रस-सम्भोग॥
पर इसमें न कभी मतलब कुछ मेरा तुमसे रहता भिन्न।
हुए सभी संकल्प भङ्ग मैं-मेरेके समूल तरु छिन्न॥
भोक्ता-भोग्य सभी कुछ तुम हो, तुम ही स्वयं बने हो भोग।
मेरा मन बन सभी तुम्हीं हो अनुभव करते योग-वियोग॥

---

* दूसरा पाठ
आठों पहर सरसते रहते तुम मन सर-बर में रसवान॥

# दशमं गीतम्

## श्रीकृष्णसविधे श्रीराधाया भावनिवेदनम्

( १ )

त्वं वै धनजनजीवनमसि मे तनुर्मनस्त्वमखिलधर्मः ।
त्वं हि ममासि सकलसुखसदनं स्वजनः प्रियः प्राणमर्म ॥
त्वं ह्येकोऽस्यलमावश्यकता चास्या एकमात्रपूर्तिः ।
त्वं न्वेकोऽखिलविधिनोपास्यः सततं शुचिसुन्दरमूर्तिः ॥

( २ )

कार्यधामनी सकले त्वं मेऽस्येकस्त्वं गम्यः सुमहान् ।
अष्टौ प्रहरानसि निवसंस्त्वं मनसि मन्दिरे मे भगवान् ॥*
कुरुषे नित्यमखिलकरणेभ्योऽतिशुचिस्पर्शमोददानम् ।
नित्यं बहिरन्तश्च निरन्तरमातनुषे त्वं निजतानम् ॥

( ३ )

प्रच्छन्नस्त्वं भवसि कदापि न मुञ्चसि नापि च संयोगम् ।
एकीभूतः कारयसे कुरुषे निर्मलरससम्भोगम् ॥
किंत्विह मेऽस्ति कदापि न कश्चित् स्वार्थस्त्वत्तो वै भिन्नः ।
संकल्पा भग्नाः सर्वेऽहंममताद्रुः सपदं छिन्नः ॥

( ४ )

भोक्ता भोग्यं सकलं त्वं वै जातः स्वयं त्वं हि भोगः ।
अनुभूयते त्वयैव मनो मे भूत्वा योगः सवियोगः ॥

---

अपरः पाठः—

* यामानष्टावुरसि सरसि मे विलसस्यखिलरसामृतवान् ॥

( ११ )

## श्रीकृष्णके प्रेमोद्गार — श्रीराधाके प्रति

( राग शिवरञ्जनी — तीन ताल )

मेरा तन-मन सब तेरा ही, तू ही सदा स्वामिनी एक।
अन्योंका उपभोग्य न भोक्ता है कदापि, यह सच्ची टेक॥
तन समीप रहता न स्थूलतः, पर जो मेरा सूक्ष्मशरीर।
क्षणभर भी न विलग रह पाता, हो उठता अत्यन्त अधीर॥
रहता सदा जुड़ा तुझसे ही, अतः बसा तेरे पद-प्रान्त।
तू ही उसकी एकमात्र जीवनकी जीवन है निभ्रान्त॥
हुआ न होगा अन्य किसीका उसपर कभी तनिक अधिकार।
नहीं किसीको सुख देगा, लेगा न किसीसे किसी प्रकार॥
यदि वह कभी किसीसे किंचित दिखता करता-पाता प्यार।
वह सब तेरे ही रसका, बस, है केवल पवित्र विस्तार॥
कह सकती तू मुझे सभी कुछ, मैं तो नित तेरे आधीन।
पर न मानना कभी अन्यथा, कभी न कहना निजको दीन॥
इतनेपर भी मैं तेरे मनकी न कभी हूँ कर पाता।
अतः बना रहता हूँ संतत तुझको दुखका ही दाता॥
अपनी ओर देख, तू मेरे सब अपराधोंको जा भूल।
करती रह कृतार्थ मुझको, दे पावन पद-पङ्कजकी धूल॥

# एकादशं गीतम्

## श्रीराधासन्निधे श्रीकृष्णस्य भावनिवेदनम्

( १ )

तनुर्मनः सकलं तवैव मे स्वामिन्येका सदा त्वमेव ।
नान्येषां भोग्यं च भोक्तृ तत् कदापि सत्यं व्रतमिदमेव ॥
स्थूलं वपुर्न पार्श्वे तिष्ठति सूक्ष्मं यत्तु मम शरीरम् ।
स्थातुं क्षणमपि पृथङ् न शक्तं भवति तदन्त्यन्तमधीरम् ॥

( २ )

युक्तं त्वय्येव सदातस्तेऽध्युषितं श्रवणयुगप्रान्तः ।
तस्यैका त्वमेव जीवनजीवनमिति वादो निर्भ्रान्तः ॥
कस्यापि कदापि मनाक् तदुपर्यधिकारोऽभून्न भविष्यति ।
कस्मैचिन्न सुखं दास्यति तन्न कथमपि कस्मादपि लास्यति ॥

( ३ )

यदि कदापि कस्मिंश्चित् किंचित् प्रेम दृश्यते विदधानम् ।
लभमानं वा तत्सर्वं रसस्य तेऽस्त्येकं सुवितानम् ॥
वक्तुं पारयसे सकलं त्वं मूर्तिमिमां मे त्वदधीनाम् ।
विद्धि नान्यथा किंतु कदाचिन्न वद त्वं नारीं दीनाम् ॥

( ४ )

इयति च सत्यपि तव मनोरथस्यास्मि न पूर्तेः प्रविधाता ।
अतो भवंस्तिष्ठामि सदा ते दुःखस्यैवाहं दाता ॥
त्वं निरीक्ष्य निखिलागसां मम त्वमिदानीं विस्मृतिमेहि ।
भव कृतार्थयन्ती मां शुचिपदकंजपरागं मे देहि ॥

( १२ )

## श्रीराधाके प्रेमोद्गार—श्रीकृष्णके प्रति

( राग शिवरञ्जनी—तीन ताल )

तुमसे सदा लिया ही मैंने, लेती-लेती थकी नहीं।
अमित प्रेम-सौभाग्य मिला, पर मैं कुछ भी दे सकी नहीं॥
मेरी त्रुटि, मेरे दोषोंको तुमने देखा नहीं कभी।
दिया सदा, देते न थके तुम, दे डाला निज प्यार सभी॥
तब भी कहते—'दे न सका मैं तुमको कुछ भी, हे प्यारी!
तुम-सी शील-गुणवती तुम ही, मैं तुमपर हूँ बलिहारी'॥
क्या मैं कहूँ प्राणप्रियतमसे, देख लजाती अपनी ओर।
मेरी हर करनीमें ही तुम प्रेम देखते, नन्दकिशोर!॥

# द्वादशं गीतम्

## श्रीकृष्णसविधे श्रीराधाया भावनिवेदनम् ।

(१)

सदा त्वदासमेव न मयाऽऽदायादाय श्रान्तं व्यक्तम् ।
अमितप्रेम सौभाग्यमवाप्तं न तु किंचिद् दातुं शक्तम् ॥
प्रिय ! कदापि दृष्टा भवता मे न त्रुटयो नापि च दोषाः ।
दत्तं सदा न ददता श्रान्तं सर्वेऽर्पिताः प्रेमकोषाः ॥

(२)

वदसि तथापि न दातुं शक्तस्तेऽहं किंचित् प्रिये ! स्वतः ।
त्वं त्वादृशी सुशीलगुणाढ्याहं त्वयि निर्मञ्छनं गतः ॥
किमहं कथयै प्राणप्रियतमं त्वमिह विलोक्य लब्धलज्जा ।
त्वं त्वेकैककृतौ मे पश्यसि नन्दकिशोर ! प्रीतिसज्जाः ॥

## श्रीकृष्णके प्रेमोद्गार—श्रीराधाके प्रति

( राग बागेश्री—तीन ताल )

राधे ! तू ही चित्तरञ्जनी, तू ही चेतनता मेरी ।
तू ही नित्य आत्मा मेरी, मैं हूँ, बस, आत्मा तेरी ॥
तेरे जीवनसे जीवन है, तेरे प्राणोंसे हैं प्राण ।
तू ही मन, मति, चक्षु, कर्ण, त्वक्, रसना, तू ही इंद्रिय-घ्राण ॥
तू ही स्थूल-सूक्ष्म इन्द्रियके विषय सभी मेरे सुखरूप ।
तू ही मैं, मैं ही तू, बस, तेरा-मेरा सम्बन्ध अनूप ॥
तेरे बिना न मैं हूँ, मेरे बिना न तू रखती अस्तित्व ।
अविनाभाव विलक्षण यह सम्बन्ध, यही, बस, जीवनतत्व ॥

## श्रीराधाके प्रेमोद्गार—श्रीकृष्णके प्रति

( राग बागेश्री—तीन ताल )

तुम अनन्त सौन्दर्य-सुधा-निधि, तुममें सब माधुर्य अनन्त ।
तुम अनन्त ऐश्वर्य-महोदधि, तुममें सब शुचि शौर्य अनन्त ॥
सकल दिव्य सद्गुण सागर तुम लहराते सब ओर अनन्त ।
सकल दिव्य रस निधि तुम अनुपम, पूर्ण रसिक, रसरूप अनन्त ॥
इस प्रकार जो सभी गुणोंमें, रसमें अमित, असीम, अपार ॥
नहीं किसी गुण-रसकी उसे अपेक्षा कुछ भी, किसी प्रकार ॥
फिर, मैं तो गुणरहित सर्वथा, कुत्सित-गति, सब भाँति गँवार ।
सुन्दरता-मधुरता-रहित, कर्कश, कुरूप, अति दोषागार ॥
नहीं वस्तु कुछ भी ऐसी, जिससे तुमको मैं दूँ रस-दान ।
जिससे तुम्हें रिझाऊँ, जिससे करूँ तुम्हारा पूजन-मान ॥
एक वस्तु मुझमें अनन्य, आत्यन्तिक, है विरहित उपमान ।
'मुझे सदा प्रिय लगते तुम', यह तुच्छ किंतु अत्यन्त महान ॥
रीझ गये तुम इसी एकपर, किया मुझे तुमने स्वीकार ।
दिया स्वयं आकर अपनेको, किया न कुछ भी सोच-विचार ॥
भूल उच्चता, भगवत्ता सब, सत्ताका सारा अधिकार ।
मुझ नगण्यसे मिले तुच्छ बन, स्वयं छोड़ संकोच-सँभार ॥
मानो अति आतुर मिलनेको, मानो हो अत्यन्त अधीर ।
तत्वरूपता भूल सभी, नेत्रोंसे लगे बहाने नीर ॥
हो व्याकुल, भर रस अगाध, आकर शुचि रस-सरिताके तीर ।
करने लगे परम अवगाहन, तोड़ सभी मर्यादा धीर ॥
बढ़ी अमित, उमड़ी रस-सरिता पावन, छायी चारों ओर
डूबे सभी भेद उसमें, फिर रहा कहीं भी ओर न छोर ॥
प्रेमी, प्रेम, परम प्रेमास्पद—नहीं ज्ञान कुछ, हुए विभोर ।
राधा प्यारी हूँ मैं, या हो केवल तुम प्रिय नन्दकिशोर ॥

## चतुर्दशं गीतम्

### श्रीकृष्णसविधे श्रीराधाया भावनिवेदनम्

त्वं त्वनन्तसौन्दर्यसुधाब्धिस्त्वयि सकलं माधुर्यमनन्तम् ।
त्वमनन्तैश्वर्यमहोदधिरसि सर्वं त्वयि शुचि शौर्यमनन्तम् ॥
सकलदिव्यसद्गुणसिन्धुस्त्वं समुल्लसन् सर्वतोऽस्यनन्तः ।
निखिलदिव्यरसनिधिरतुलोऽसि पूर्णरसिको रसरूपोऽनन्तः ।
एवं यः सकलेषु गुणेषु रसेऽप्यमितो निरवधिकोऽपारः ।
नापेक्षेत स रसं गुणं वा किमपि कथंचित् सकलाधारः ॥
ग्राम्याहं तु सर्वथा पुनरिह कुत्सितगतिरतिसद्गुणहीना ।
कद्रूपा कर्कशातिदोषा सुन्दरतामाधुर्यविहीना ॥
किमपि वस्तु नेदृशं यतोऽहं कुर्यां ते प्रियतम रसदानम् ।
कुर्यां येन तवानुरञ्जनं येन च तव पूजनं समानम् ॥
एकमस्ति मयि वस्त्वनन्यमात्यन्तिकमप्युपमारहितं यत् ।
मह्यं सदा रोचसे त्वमिति तु तुच्छं किं त्वत्यन्तमिह महत् ।
एकेनानेनैव रञ्जितः कृतवांस्त्वं तु ममाङ्गीकारम् ।
स्वयमागत्यार्पितवान् मे स्वं कृतवान् किंचिन्नैव विचारम् ॥
भगवत्तामुच्चतां समं विस्मृत्य च सत्ताया अधिकारम् ।
मिलितो मया तुच्छया तुच्छीभूय विहाय च लज्जाभारम् ॥
दृष्टवती त्वामत्यातुरमिव मिलितुं च तदात्यन्तमधीरम् ।
तत्त्वरूपतां विस्मृत्य समां नयनाभ्यां विसृजन्तं नीरम् ॥
भूत्वा रसमगाधमथ विकलः संश्रितशुचिरसतटिनीतीरः ।
कृतवानसि परमवगाहनमिह भग्नाखिलमर्यादोऽधीरः ।
अमितैधिता तदोल्लसिता पावनरसनदी सर्वतो व्याप्ता ।
भग्नास्तत्र समे भेदा न पुनः पारावाराः क्वचिदाप्ताः ॥
प्रिया तवाहं राधास्म्यथवा त्वमसि प्रियो मे नन्दकुमारः ।
प्रेमी प्रेम प्रिय इति नावेस्त्वं विगलितवेद्यान्तरभारः ॥

## श्रीकृष्णके प्रेमोद्गार—श्रीराधाके प्रति

( राग बागेश्री—तीन ताल )

राधे ! तू ही चित्तरञ्जनी, तू ही चेतनता मेरी ।
तू ही नित्य आत्मा मेरी, मैं हूँ, बस, आत्मा तेरी ॥
तेरे जीवनसे जीवन है, तेरे प्राणोंसे हैं प्राण ।
तू ही मन, मति, चक्षु, कर्ण, त्वक्, रसना, तू ही इंद्रिय-घ्राण ॥
तू ही स्थूल-सूक्ष्म इन्द्रियके विषय सभी मेरे सुखरूप ।
तू ही मैं, मैं ही तू, बस, तेरा-मेरा सम्बन्ध अनूप ॥
तेरे बिना न मैं हूँ, मेरे बिना न तू रखती अस्तित्व ।
अविनाभाव विलक्षण यह सम्बन्ध, यही, बस, जीवनतत्व ॥

# त्रयोदशं गीतम्

## श्रीराधासविधे श्रीकृष्णस्य भावनिवेदनम्

( १ )

राधे त्वमेव मनसोऽस्यनुरञ्जिनी मे
किंच त्वमेव दयिते मम चेतनत्वम् ।
आत्मा सनातनतमोऽसि मम त्वमेव
ते चास्म्यहं प्रियतमे परमोऽन्तरात्मा ॥

( २ )

त्वज्जीवनादनिशमस्ति च जीवनं मे
प्राणेभ्य एव तव मेऽप्यसवो ध्रियन्ते ।
बुद्धिर्मनोऽसि युगलं श्रवणद्वयं त्वग्
घ्राणेन्द्रियं च रसनासि मम त्वमेव ॥

( ३ )

स्थूलानां सूक्ष्मकाणां सुखमयविषया मे त्वमेवेन्द्रियाणां
सम्बन्धो निस्तुलोऽयं तव मम दयितेऽहं त्वमेवास्म्यहं त्वम् ।
नैवाहं त्वां विनास्मि त्वमपि च न विना मां बिभर्ष्यात्मसत्तां
योगोऽपूर्वोऽविनाभाव इति निगदितं तत्त्वकं जीवनस्य ॥

## श्रीकृष्णके प्रेमोद्‌गार—श्रीराधाके प्रति

( राग बागेश्री—तीन ताल )

राधे ! तू ही चित्तरञ्जनी, तू ही चेतनता मेरी ।
तू ही नित्य आत्मा मेरी, मैं हूँ, बस, आत्मा तेरी ॥
तेरे जीवनसे जीवन है, तेरे प्राणोंसे हैं प्राण ।
तू ही मन, मति, चक्षु, कर्ण, त्वक्, रसना, तू ही इंद्रिय-घ्राण ॥
तू ही स्थूल-सूक्ष्म इन्द्रियके विषय सभी मेरे सुखरूप ।
तू ही मैं, मैं ही तू, बस, तेरा-मेरा सम्बन्ध अनूप ॥
तेरे बिना न मैं हूँ, मेरे बिना न तू रखती अस्तित्व ।
अविनाभाव विलक्षण यह सम्बन्ध, यही, बस, जीवनतत्व ॥

# त्रयोदशं गीतम्

## श्रीराधासविधे श्रीकृष्णस्य भावनिवेदनम्

( १ )

राधे त्वमेव मनसोऽस्यनुरञ्जिनी मे
किंच त्वमेव दयिते मम चेतनत्वम्।
आत्मा सनातनतमोऽसि मम त्वमेव
ते चास्म्यहं प्रियतमे परमोऽन्तरात्मा ॥

( २ )

त्वज्जीवनादनिशमस्ति च जीवनं मे
प्राणेभ्य एव तव मेऽप्यसवो प्रियन्ते।
बुद्धिर्मनोऽसि युगलं श्रवणद्वयं त्वग्
घ्राणेन्द्रियं च रसनासि मम त्वमेव ॥

( ३ )

स्थूलानां सूक्ष्मकाणां सुखमयविषया मे त्वमेवेन्द्रियाणां
सम्बन्धो निस्तुलोऽयं तव मम दयितेऽहं त्वमेवास्म्यहं त्वम्।
नैवाहं त्वां विनास्मि त्वमपि च न विना मां चिरम्यात्मसत्तां
योगोऽपूर्वोऽविनाभाव इति निगदितं तत्त्वकं जीवनस्य ॥

## श्रीराधाके प्रेमोद्गार—श्रीकृष्णके प्रति

( राग बागेश्री—तीन ताल )

तुम अनन्त सौन्दर्य-सुधा-निधि, तुममें सब माधुर्य अनन्त ।
तुम अनन्त ऐश्वर्य-महोदधि, तुममें सब शुचि शौर्य अनन्त ॥
सकल दिव्य सद्गुण सागर तुम लहराते सब ओर अनन्त ।
सकल दिव्य रस निधि तुम अनुपम, पूर्ण रसिक, रसरूप अनन्त ॥
इस प्रकार जो सभी गुणोंमें, रसमें अमित, असीम, अपार ॥
नहीं किसी गुण-रसकी उसे अपेक्षा कुछ भी, किसी प्रकार ॥
फिर, मैं तो गुणरहित सर्वथा, कुत्सित-गति, सब भाँति गँवार ।
सुन्दरता-मधुरता-रहित, कर्कश, कुरूप, अति दोषागार ॥
नहीं वस्तु कुछ भी ऐसी, जिससे तुमको मैं दूँ रस-दान ।
जिससे तुम्हें रिझाऊँ, जिससे करूँ तुम्हारा पूजन-मान ॥
एक वस्तु मुझमें अनन्य, आत्यन्तिक, है विरहित उपमान ।
'मुझे सदा प्रिय लगते तुम', यह तुच्छ किंतु अत्यन्त महान ॥
रीझ गये तुम इसी एकपर, किया मुझे तुमने स्वीकार ।
दिया स्वयं आकर अपनेको, किया न कुछ भी सोच-विचार ॥
भूल उच्चता, भगवत्ता सब, सत्ताका सारा अधिकार ।
मुझ नगण्यसे मिले तुच्छ बन, स्वयं छोड़ संकोच-सँभार ॥
मानो अति आतुर मिलनेको, मानो हो अत्यन्त अधीर ।
तत्वरूपता भूल सभी, नेत्रोंसे लगे बहाने नीर ॥
हो व्याकुल, भर रस अगाध, आकर शुचि रस-सरिताके तीर ।
करने लगे परम अवगाहन, तोड़ सभी मर्यादा धीर ॥
बढ़ी अमित, उमड़ी रस-सरिता पावन, छायी चारों ओर
डूबे सभी भेद उसमें, फिर रहा कहीं भी ओर न छोर ॥
प्रेमी, प्रेम, परम प्रेमास्पद—नहीं ज्ञान कुछ, हुए विभोर ।
राधा प्यारी हूँ मैं, या हो केवल तुम प्रिय नन्दकिशोर ॥

# चतुर्दशं गीतम्

## श्रीकृष्णसविधे श्रीराधाया भावनिवेदनम्

त्वं त्वनन्तसौन्दर्यसुधाब्धिस्त्वयि सकलं माधुर्यमनन्तम् ।
त्वमनन्तैश्वर्यमहोदधिरसि सर्वं त्वयि शुचि शौर्यमनन्तम् ॥
सकलदिव्यसद्‌गुणसिन्धुस्त्वं समुल्लसन् सर्वतोऽस्यनन्तः ।
निखिलदिव्यरसनिधिरतुलोऽसि पूर्णरसिको रसरूपोऽनन्तः ।
एवं यः सकलेषु गुणेषु रसेऽप्यमितो निरवधिकोऽपारः ।
नापेक्षेत स रसं गुणं वा किमपि कथंचित् सकलाधारः ॥
ग्राम्याहं तु सर्वथा पुनरिह कुत्सितगतिरतिसद्‌गुणहीना ।
कद्रूपा कर्कशातिदोषा सुन्दरतामाधुर्यविहीना ॥
किमपि वस्तु नेदृशं यतोऽहं कुर्यां ते प्रियतम रसदानम् ।
कुर्यां येन तवानुरञ्जनं येन च तव पूजनं समानम् ॥
एकमस्ति मयि वस्त्वनन्यमात्यन्तिकमप्युपमारहितं यत् ।
मह्यं सदा रोचसे त्वमिति तु तुच्छं किं त्वत्यन्तमिह महत् ।
एकेनानेनैव रञ्जितः कृतवांस्त्वं नु ममाङ्गीकारम् ।
स्वयमागत्यार्पितवान् मे स्वं कृतवान् किंचिन्नैव विचारम् ॥
भगवत्तामुच्चतां समं विस्मृत्य च सत्ताया अधिकारम् ।
मिलितो मया तुच्छया तुच्छीभूय विहाय च लज्जाभारम् ॥
दृष्टवती त्वामत्यातुरमिव मिलितुं च तदात्यन्तमधीरम् ।
तत्त्वरूपतां विस्मृत्य समां नयनाभ्यां विसृजन्तं नीरम् ॥
भूत्वा रसमगाधमथ विकलः संश्रितशुचिरसतटिनीतीरः ।
कृतवानसि परमवगाहनमिह भग्नाखिलमर्यादोऽधीरः ।
अमितैधिता तदोल्लसिता पावनरसनदी सर्वतो व्याप्ता ।
भग्नास्तत्र समे भेदा न पुनः पारावाराः क्वचिदाप्ताः ॥
प्रिया तवाहं राधास्म्यथवा त्वमसि प्रियो मे नन्दकुमारः ।
प्रेमी प्रेम प्रिय इति नावेस्त्वं विगलितवेद्यान्तरभारः ॥

( १५ )

## श्रीकृष्णके प्रेमोद्गार—श्रीराधाके प्रति

( राग भैरवी—तीन ताल )

राधा ! तुम-सी तुम्हीं एक हो, नहीं कहीं भी उपमा और ।
लहराता अत्यन्त सुधा-रस-सागर, जिसका ओर न छोर ॥
मैं नित रहता डूबा उसमें, नहीं कभी ऊपर आता ।
कभी तुम्हारी ही इच्छासे हूँ लहरोंमें लहराता ॥
पर वे लहरें भी गाती हैं एक तुम्हारा रम्य महत्व ।
उनका सब सौन्दर्य और माधुर्य तुम्हारा ही है स्वत्व ॥
तो भी उनके बाह्य रूपमें ही, बस, मैं हूँ लहराता ।
केवल तुम्हें सुखी करनेको सहज कभी ऊपर आता ॥
एकछत्र स्वामिनि तुम मेरी, अनुकम्पा अति बरसाती ।
रखकर सदा मुझे संनिधिमें जीवनके क्षण सरसाती ॥
अमित नेत्रसे गुण-दर्शन कर, सदा सराहा ही करती ।
सदा बढ़ाती सुख अनुपम, उल्लास अमित उरमें भरती ॥
सदा, सदा मैं सदा तुम्हारा, नहीं कदा कोई भी अन्य—
कहीं जरा भी कर पाता अधिकार दासपर सदा अनन्य ॥
जैसे मुझे नचाओगी तुम, वैसे नित्य करूँगा नृत्य ।
यही धर्म है, सहज प्रकृति यह, यही एक स्वाभाविक कृत्य ।

# पञ्चदशं गीतम्

## श्रीराधासविधे श्रीकृष्णस्य भावनिवेदनम्

(१)

एका त्वं त्वादृशी राधिके क्वचिदपि न तव तुलाधारः।
अत्युल्लसति सुधारसजलधिस्त्वयि यस्य न पारोऽवारः॥
नित्यमहं निवसामि निमग्नस्तत्र कदापि नोर्ध्वमायामि।
किं च कदापि तवैवेच्छातश्चञ्चद्वीचिषु समुद्भ्रामि॥

(२)

ता वीचयोऽपि किंतु केवलं तव गायन्ति सुरम्यमहत्त्वम्।
सौन्दर्यं माधुर्यं सर्वं तासामस्ति तवैव स्वत्वम्॥
तासां बाह्यरूप एवाहं तरङ्गितस्तथापि विलसामि।
एकां त्वां सुखिनीं कर्तुमहं सुखं कदाचिदूर्ध्वमायामि॥

(३)

एकच्छत्रा मे स्वामिन्यसि मयि कुरुषेऽति कृपावर्षम्।
रक्षित्वा सविधे मां तनुषे सदा जीवनक्षणे रसम्॥
अमितेक्षणैर्गुणान् दृष्ट्वा मयि परं प्रशंसस्येव सदा।
हृद्यमितोल्लासं पूरयसे सुखमनुपममेधयसि सदा॥

(४)

सदा सदा सर्वदा तवाहं नहि कदाचिदपि केऽप्यन्ये।
क्वापि मनागप्यधिकारं मयि कर्तुमलं दासेऽनन्ये॥
यद्वद्वर्तयिष्यसे त्वं मां नर्तिष्यामि तथा नित्यम्।
धर्मोऽयमियं प्रकृतिः सहजैकमिदं स्वाभाविककृत्यम्॥

( १६ )

## श्रीराधाके प्रेमोद्गार—श्रीकृष्णके प्रति

( राग भैरवी तर्ज—तीन ताल )

तुम हो यन्त्री, मैं यन्त्र, काठकी पुतली मैं, तुम सूत्रधार।
तुम करवाओ, कहलाओ, मुझे, नचाओ निज इच्छानुसार ॥
मैं करूँ, कहूँ, नाचूँ नित ही परतन्त्र, न कोई अहंकार।
मन मौन—नहीं,मन ही न पृथक्; मैं अकल खिलौना,तुम खिलार।
क्या करूँ, नहीं क्या करूँ—करूँ इसका मैं कैसे कुछ विचार ?
तुम करो सदा स्वच्छन्द, सुखी जो करे तुम्हें, सो प्रिय विहार ॥
अनबोल, नित्य निष्क्रिय, स्पन्दनसे रहित, सदा मैं निर्विकार।
तुम जब जो चाहो, करो सदा बेशर्त, न कोई भी करार ॥
मरना-जीना मेरा कैसा ? कैसा मेरा मानामान ?
हैं सभी तुम्हारे ही, प्रियतम ! ये खेल नित्य सुखमय महान ॥
कर दिया क्रीडनक बना मुझे निज करका तुमने अति निहाल।
यह भी कैसे मानूँ-जानूँ, जानो तुम ही निज हाल-चाल ॥
इतना मैं जो यह बोल गयी, तुम जान रहे—है कहाँ कौन ?
तुम ही बोले भर सुर मुझमें मुखरा-से, मैं तो शून्य, मौन ॥

## षोडशं गीतम्

### श्रीकृष्णसविधे श्रीराधाया भावनिवेदनम्

प्राणेश यन्त्री त्वमहं तु यन्त्रं
पुत्तल्यहं त्वं खलु सूत्रधारः।
आत्मेच्छया कारयसे क्रियां त्वं
सम्भाषयन्नर्तयसेऽनिशं माम्॥

कुर्यां श्रवै संतनुयां च नृत्यं
सदा वशा कापि न मय्यहंता।
मौनं गतं-नो, न पृथङ् मनोऽस्ति
त्वं क्रीडकः क्रीडनिकास्म्यचिन्त्या॥

कार्यं मया किं किमु वा न कार्य-
मेतत्कथं किंचन चिन्तयानि।
स्वच्छन्दतः स्वाभिमतं विहारं
कुरुष्व तं यः सुखयेत्सदा त्वाम्॥

अवागहं संततभक्रिया चा-
प्यस्पन्दनानारतनिर्विकारा।
यदा यदिच्छेः कुरु तत्सदा त्वं
पणो न कश्चित् समयो न कश्चित्॥

मृत्युर्नु मे किं किमु जीवनं वा
कथं नु मानो मम वापमानः।
इमास्तवैव प्रिय! केलयो वै
लसन्ति नित्यं सुसुखा महत्यः॥

करस्य मां क्रीडनिकां विधाय
कृता त्वयाहं मुदिताऽऽप्तकामा।
मन्येय जानानि कथं न्विदं च
त्वमेव जानीहि निजां प्रवृत्तिम्॥

अहं यदेतावदहो अवोचं
तच्चापि जानन्नसि को नु कुत्र।
त्वमेव वक्ता मुखरेस भूत्वा
मयि स्वरं साहमवाक् समौना॥७॥

## ( पुष्पिका )

महाभाव-रसराजके मधुर मनोहर भाव।
दिव्य, मधुरतम, रागमय, दैन्य विभूषित चाव॥
दोनों दोनोंके लिये सहज सभी कर त्याग।
सुखद परस्पर बन रहे, छलक रहा अनुराग॥
दोनों दोनोंके सदा प्रेमी-प्रेष्ठ महान।
नित्य, अनन्त, अचिन्त्य, शुचि, अनिर्वाच्य रसखान॥
सुख दुख दोनों ही सुखद, प्रियतम-सुखके हेतु।
अन्य सभी टूटे सहज मिथ्या निजसुख-सेतु॥
राधा-माधव-प्रेम-रस वाचा-चित्त-अतीत।
करते शाखाचन्द्र-से इङ्गित सोलह गीत॥

## ( पुष्पिका )

( १ )

भावो महाभावरसाधिराजयोर्विभाति दिव्यो मधुरो मनोहरः ।
मिथोऽभिलाषो मधुरोऽधिकस्तयो रागात्मको दीनतया विभूषितः ॥

( २ )

उभौ द्वयोरेव कृते स्वभावात् त्यागं परं सर्वविधं विधाय ।
परस्परं सौख्यकरौ नु जातौ समुच्छलन्नस्ति सदानुरागः ॥

( ३ )

उभौ विभातोऽप्युभयोः सदैव प्रेमान्वितौ प्रेष्ठतमौ महान्तौ ।
नित्यावनन्तौ मनसाप्यचिन्त्यौ पुण्यावनिर्वाच्यरसोद्गमौ च ॥

( ४ )

दुःखं सुखं चोभयमेव सौख्यप्रदं भवेत् प्रेष्ठसुखाय चेत्स्यात् ।
सर्वोऽपरः स्यात् सहजो विभग्नो मिथ्यात्मकःस्वस्य सुखस्य सेतुः ॥

( ५ )

राधामाधवयोः प्रेमरसोऽवाक्चित्तगोचरः ।
तमिङ्गयन्ति शाखेन्दुसमं गीतानि षोडश ॥

## समर्पणम्

बन्धुश्रीहनुमत्प्रसादसुधिया यानि प्रणीतानि वा
इष्टप्रेमरसान्वितानि मनसा गीतान्यहो षोडश ।
तानीहान्ववदं यदामरगिराहं रामनारायणो
राधामाधवयोस्तदस्त्वतितरां प्रीत्यै परायै चिरम् ॥

